कृत्वा मासोपवासन्तु संयतात्मा जितेन्द्रियः ।
ततोऽर्चयीत वै पुण्यं द्वादश्यां गरुडध्वजम् ॥
पूजयेत्पुष्पमालाभिर्गन्धधूपविलेपनैः ।
वस्त्रालङ्कारवाद्यैश्च तोषयेदच्युतं नरः ॥
स्नापयीत हरिं भक्त्या तीर्थचन्दनवारिणा ।
चन्दनेनानुलिप्ताङ्गं पुष्पधूपैरलंकृतम् ॥
वस्त्रदानादिभिश्चैव भोजयीत द्विजोत्तमान् ॥
दद्याच्च दक्षिणां तेभ्यः प्रणिपत्य क्षमापयेत् ।
विप्रान्क्षमापयित्वा तु विसृज्याभ्यर्च्य पूज्य च ।
एवं वित्तानुसारेण भक्तियुक्तेन शक्तितः ।
एवं मासोपवासं तु कृत्वा ऽभ्यर्च्य जनार्दनम् ।
भोजयित्वा द्विजांश्चैव विष्णुलोके महीयते ॥
एवं मासोपवासान् हि सम्यक्कृत्वा त्रयोदश ।
निर्वापयेत्ततस्तान्वै विधिना येन तच्छृणु ॥
कारयेद्वैष्णवं यज्ञमेकादश्यामुपोषितः ।
पूजयित्वा तु देवेशमाचार्यानुज्ञया हरिम् ॥
अर्चयित्वा हरिं भक्त्या अभिवाद्य गुरुं तथा ।
तथा ऽनुभोजयेद्विप्रान्भोजयित्वा यथाविधि ॥
विशुद्धकुलचारित्रान् विष्णुपूजनतत्परान् ।
पूजयित्वा द्विजान्सम्यक्भोजयित्वा त्रयोदश ॥
तावन्ति वस्त्रयुग्मानि भोजनाच्छादनानि च ।
योगपट्टानि शुभ्राणि ब्रह्मसूत्राणि चैव हि ॥
दद्याच्चैव द्विजाग्रेभ्यः पूजयित्वा प्रणम्य च ।
ततोऽनुकल्पयेच्छय्यां श्रेष्ठास्तरणसंस्कृताम् ॥
साच्छादनां शुभां श्रेष्ठां सोपधानामलङ्कृताम् ।
कारयित्वात्मनो मूर्तिं काञ्चनीं तु स्वशक्तितः ॥

न्यसेत्तस्यान्तु शय्यायामर्चयित्वा स्रगादिभिः ।
आसनं पादुके छत्रं वस्त्रयुग्ममुपानहौ ॥
पवित्राणि च पुष्पाणि शय्यायामुपकल्पयेत् ।
एवं शय्यां तु संकल्प्य प्रणिपत्य च तान् द्विजान् ॥
प्रार्थयेच्चानुमोदार्थं विष्णुलोकं व्रजाम्यहम् ।
एवमभ्यर्चिता विप्रा वदेयुर्व्रतिनं तदा ॥
व्रज व्रज नरश्रेष्ठ विष्णोः स्थानमनामयम् ।
विमानं वैष्णवं दिव्यं शय्यया परिकल्पितम् ।
तेन विष्णुपदं याहि सदानन्दमनामयम् ।
ततो विसर्जयेद्विप्रान् प्रणिपत्यानुगम्य च ॥
ततस्तु पूजयेद्भक्त्या गुरुं ज्ञानप्रदायकम् ।
तां शय्यां कल्पितां सम्यक् गुरुं ज्ञानप्रदायकम् ॥
प्रणम्य शिरसा शान्तो गुरवे प्रतिपादयेत् ।
कृत्वा मासोपवासन्तु नरो विष्णुतनुं विशेत् ॥
कृतमासोपवासस्तु विष्णुपूजनतत्परः ।
नयेच्छान्तमनाः कालं धर्मस्य प्रयतेन्द्रियः ॥
कृत्वा मासोपवासांश्च निर्वाप्य विधिवन्मुने ।
कुलानां शतमुद्धृत्य विष्णुलोकं व्रजेन्नरः ॥
यस्मिञ्जातो महापुण्ये कुले मासेऽथवा सकृत् ।
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥
नरो मासोपवासानां कर्त्ता पुण्यवतां वरः ।
पितृमातृकुलाभ्यां च समं विष्णुपुरीं व्रजेत् ॥
नारी तासु महाभागा यथोक्तव्रतमास्थिता ।
कृत्वा मासोपवासांश्च व्रजेद्विष्णुं सनातनम् ।

नारद उवाच—

सुदुष्करमिदं देव मूर्च्छाग्लानिकरं नृणाम् ।
व्रतं मासोपवासाख्यं भक्तिं जनयदच्युते ।

पीडितस्य भृशं देव मुमूर्षोर्व्रतिनस्तथा ।
त्यागो वाऽनुग्रहो वा ऽथ किन्नु कार्यं पितामह ॥
ब्रह्मोवाच—
व्रतस्थं कर्षितं दृष्ट्वा मुमूर्षुं वा तपोधन ॥
दृष्ट्वा तु ब्राह्मणस्तस्य कुर्यात्सम्यगनुग्रहम् ।
अमृतं पाययेत्क्षीरमिच्छमाने सकृन्निशि ॥
यथेह न वियुज्येत प्राणैः क्षुत्पीडितो व्रती ।
अतिमूर्छान्वितं क्षीणं मुमूर्षुं क्षुत्प्रपीडितम् ॥
पाययित्वा शतं क्षीरं रक्षेद्दत्त्वा फलानि च ।
अहोरात्रं च यो नित्यं व्रतस्थं परिपालयेत् ।
पयोमूलफलं दत्त्वा विष्णुलोकं व्रजेत सः ॥
एवं मासोपवासस्थमारूढं प्राणसंशये ।
अव्रतघ्नगुणैर्दिव्यैः परीप्सेद् ब्राह्मणाज्ञया ।
नैते व्रतं विनिघ्नन्ति हविर्विप्रानुमोदितम् ।
क्षीरौषधे गुरोराज्ञा आपो मूलं फलानि च ।
एवं कृत्वाऽभिरक्षेत सगुडं पायसं तथा ।
पाययेद्रक्षितो यस्मात्समाप्नोति पुनर्व्रतम् ।
अथ विष्णुर्व्रतं विष्णुर्दाता विष्णुर्व्रती तथा ।
सर्वं विष्णुमयं ज्ञात्वा व्रतस्थं क्षीणमुद्धरेत् ।
यदा मुमूर्षुर्निश्चेष्टः परिम्लानोऽतिमूर्छितः ।
तदा समुद्धरेत्क्षीणमिच्छन्तं विमुखे स्थितम् ।
परिपाल्य व्रती देहं व्रतशेषं समापयेत् ।
यथोक्तद्विगुणं तस्य फलं विप्रमुखोदितम् ॥
इन्द्रियार्थेष्वसंसक्ता सदैव विमला मतिः ।
परितोषयते विष्णुं नोपवासो जितात्मनाम् ॥
किं तस्य बहुभिस्तीक्ष्णैः स्नानहोमजपव्रतैः ।
यतेन्द्रियगणो घोरो निर्जितो दुष्टचेतसा ॥

काशीखण्डे—

*'ऊर्जे यवान्नमश्नीयाद्देवान्नमथवा पुनः ।
वृन्ताकं सूरणं चैव शूकशिम्बीश्च वर्जयेत् ॥'
जितेन्द्रियः सदा शान्तः सर्वभूतहिते रतः ।
वासुदेवपरो नित्यमक्लेशं कर्तुमर्हति ।
कृत्वा व्रतं यथोक्तं तु वैष्णवं पुरुषो व्रतम् ।
विष्णुलोकमवाप्नोति पुनरावृत्तिदुर्लभम् ।
ये स्मरन्ति सदा विष्णुं विशुद्धेनान्तरात्मना ॥
ते प्रयान्ति भयं त्यक्त्वा विष्णुलोकमनामयम् ।
प्रभाते चार्धरात्रे च मध्याह्ने दिनसंक्षये ।
अच्युतं येऽनुकीर्तन्ति ते तरन्ति भवार्णवम् ।
आनन्दितोऽथ दुःखार्त्तः क्रुद्धः शान्तोऽथवा हरिम् ।
यो ऽनुकीर्तयते भक्त्या स गच्छेद्वैष्णवीं पुरीम् ।
गर्भजन्मजरारोगदुःखसंसारबन्धनैः ।
निवार्यते नरो नित्यं वासुदेवमनुस्मरन् ॥
स्थावरे जङ्गमे चैव स्थले सूक्ष्मे शुभाशुभे ।
विष्णुं पश्यति सर्वत्र यः स विष्णुः स्वयं नरः ॥
सर्वं विष्णुमयं ज्ञात्वा त्रैलोक्यं सचराचरम् ।
यस्य शान्ता मतिस्तेन पूजितो गरुडध्वजः ।
इति कल्पाऽनुकल्पानां व्रतानामुत्तमस्य च ।
...ुलोकमाप्नोति प्रसादाच्चक्रपाणिनः ॥
विधिर्मासोपवासस्य यथा तत्परिकीर्तितः ॥
सुत स्नेहान्मुनिश्रेष्ठ सर्वलोकहिताय च ।
श्रुत्वा श्रुत्वा च यो भक्त्या नरो विष्णुपुरीं व्रजेत् ।
...क्ताय प्रदातव्यं न देयं दुष्टचेतसे ॥' इति ।
...म्बीः कपिकच्छुः । नन्दिपुराणे—
कार्तिके मासि मांसन्तु परिवर्जयेत् ।

संवत्सरस्य लभते पुण्यं मांसविवर्जनात् ।"

भारते—

'कार्तिके वर्जयेन्मांसं वर्जयेत्कार्तिके मधु ।'

काशीखण्डे—

"मधुत्यागे घृतं दद्यात्पायसं च सशर्करम् ।
कार्तिके मांसनियमे प्रदद्यात्कार्तिकव्रती ॥
कूष्माण्डानि समाषाणि दशस्वर्णयुतान्यपि" ।

ब्राह्मे—

"विष्णुवेश्मनि यो दद्यात्कार्तिके मासि दीपकम् ।
अग्निष्टोमसहस्रस्य फलं प्राप्नोति मानवः ॥"

विष्णुइति उपलक्षणम् । शिवादेर्विप्रादेश्च वेश्मनोऽपि ग्रहणात् ।

"चतुष्पथेषु रथ्यासु ब्राह्मणावसथेषु च ।
वृक्षमूलेषु गोष्ठेषु कान्तारगहनेषु च ।
दीपदानाद्धि सर्वत्र महाफलमवाप्नुयात् ।"

स्कान्दे—

प्रदीपमालां यः कुर्यात्कार्तिके मासि वै मम ।
अवसानेषु दीपानां ब्राह्मणान् भोजयेच्छुचिः ॥"

वाराहे—

"न गृहे कार्तिकं कुर्याद्विशेषेण तु कार्तिकीम् ।
तीर्थे तु कार्तिकं कुर्यात्सर्वयत्नेन भामिनि ।"

काशीखण्डे—

"कार्तिके मौनभोजी यः सोऽश्नात्यमृतमेव हि ।
स घण्टां सतिलां मौनी सहिरण्यां प्रदापयेत् ॥
कार्तिके लवणं त्यक्तं येन व्रतवता सता ।
त्यक्ताः सर्वे रसास्तेन तत्त्यागी गां प्रदापयेत् ॥
भूशय्यां कार्तिके कुर्वन् न भवं संस्पृशेद्व्रती ।
पर्यङ्कं भूषणैर्दद्यात्सतूलं सोपधानकम् ॥"